# ॥ यज्ञवराहमूर्तिस्तुतिः ॥

**ऋषय ऊचुः**

जितं जितं तेऽजित यज्ञभावन
त्रयीं तनुं स्वां परिधुंवते नमः ।
यद्रोमगर्तेषु निलिल्युरद्धयस्तस्मै
नमः कारणसूकराय ते ॥ १ ॥

रूपं तवैतन्ननु दुष्कृतात्मनां
दुर्दर्शनं देव यदध्वरात्मकं ।
छंदांसि यस्य त्वचि बर्हिरोमस्वाज्यं
दृशि त्वंघ्रिषु चातुर्होत्रं ॥ २ ॥

स्रक्तुंड आसीत्स्रुव ईश नासयो–
रिडोदरे चमसाः कर्णरंध्रे ।
प्राशित्रमास्ये ग्रसने ग्रहास्तु ते
यच्चर्वणं ते भगवन्नग्निहोत्रं ॥ ३ ॥

दीक्षानुजन्मोपसदः शिरोधरं त्वं
प्रायणीयोदयनीयदंष्ट्रः ।
जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः
सत्यावसथ्यं चितयोऽसवो हि ते ॥ ४ ॥

सोमस्तु रेतः सवनान्यवस्थितिः
संस्थाविभेदास्तव देव धातवः ।
सत्राणि सर्वाणि शरीरसंधिस्त्वं
सर्वयज्ञक्रतुरिष्टिबंधनः ॥ ५ ॥

नमो नमस्तेऽखिलमंत्रदेवता
द्रव्याय सर्वक्रतवे क्रियात्मने ।
वैराग्यभक्त्यात्मजयानुभावित
ज्ञानाय विद्यागुरवे नमो नमः ॥ ६ ॥

दंष्ट्राग्रकोट्या भगवंस्त्वया धृता
विराजते भूधर भूः सभूधरा ।
यथा वनान्निःसरतो दता धृता
मतंगजेंद्रस्य सपत्रपद्मिनी ॥ ७ ॥

त्रयीमयं रूपमिदं च सौकरं
भूमंडलेनाथ दता धृतेन ते ।
चकास्ति शृंगोढघनेन भूयसा
कुलाचलेंद्रस्य यथैव विभ्रमः ॥ ८ ॥

संस्थापयैनां जगतां सतस्थुषां
लोकाय पत्नीमसि मातरं पिता ।
विधेम चास्यै नमसा सह त्वया
यस्यां स्वतेजोऽग्निमिवारणावधाः ॥ ९ ॥

कः श्रद्दधीतान्यतमस्तव प्रभो
रसां गताया भुव उद्विबर्हणं ।
न विस्मयोऽसौ त्वयि विश्वविस्मये
यो माययेदं ससृजेऽतिविस्मयं ॥ १० ॥

विधुन्वता वेदमयं निजं वपुः
जनस्तपःसत्यनिवासिनो वयं ।
सटाशिखोद्धूतशिवांबुबिंदुभिः
विमृज्यमाना भृशमीश पाविताः ॥ ११ ॥

स वै बत भ्रष्टमतिस्तवैष ते
यः कर्मणां पारमपारकर्मणः ।
यद्योगमायागुणयोगमोहितं
विश्वं समस्तं भगवन् विधेहि शं ॥४६ ॥

॥ इति श्रीमद्भागवते महापुराणे तृतीयेस्कंधे त्रयोदशोऽध्याय
ऋषिभिर्कृत यज्ञवराहमूर्तिस्तुतिः संपूर्णः ॥